दूरध्वनिः – "संस्कृतम्"

बाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२ | 15 th JULY 1974 | क्रमांकः ७

अश्वत्थामशपथे

दुर्योधनसविधे अश्वत्थाम्नः शौर्यालापाः

आनन्द-आषाढाङ्कः

शकाब्दाः १८९६

मूल्यम् ०–५० पैसाः

# विषयसूची

# दैवीवाक्

अग्निना रयि मश्नवत्पोष मेव दिवे दिवे ।
यशसं वीरवत्तमं ॥

योऽयं होत्रा स्तुत्योऽग्निः तेनाग्निना निमित्तभूतेन यजमानो रयिं = धनं, अश्नवत् = प्राप्नोति । कीदृशं रयिं? दिवे दिवे पोषमेव = प्रतिदिनं पुष्यमाणतया वर्धमान मेव, न तु कदाचिदपि क्षीयमाणम् । यशसं = दानादिना यशोयुक्तं, वीरवत्तमं = अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतं । सति हि धने पुरुषाः सम्पद्यन्ते ।

ज्योतिः ओम्

# सम्पादकीयम्

## जनानां संस्कृतम् शुभम्

जगति वर्तमानानां वर्तिष्यमाणानां जनानाम् संस्कृतं शुभावह मेव भवति । तत्र संस्कृतम् नाम किमिति विचारणीयम् भवति । संस्कृतं नाम संस्कारविशिष्टमित्यर्थः । तत् संस्कृतं वस्तु वा वाङमयं वा यत्किञ्चिद्वाभवेत् तत् जनानां शुभावहमेव भवति । कथमिति चेत् प्राकृतानि प्रकृतिजन्यानि तरुपाषाणलोहादीनि संस्कारविशिष्टानि भवेयुर्यदि तेषां लोके सर्वजनरञ्जकं अत्युन्नतस्थानं भवति । उदाहरणतया पश्यत । प्रकृतिजन्यं तथा च प्राकृतं अयः विज्ञानशास्त्रज्ञैः संस्करणं लब्ध्वा यन्त्रात्मना परिणमय्य शकटरूपेण धान्यपेषणयन्त्ररूपेण लोके जनानां शुभकारि हितकारि सम्मोदकारि च भवति । तद्वदेव प्राकृतं वस्तु दारु (Wood) तक्षकादिभिः (by the Corpenters) संस्कारं लब्ध्वा आसनरूपेण मञ्चारूपेण शय्यारूपेण लोकस्य शुभावहं हितदायकं अनुकूलप्रदं भवति । प्रकृतिजन्य (प्राकृतः) पाषाणः शिल्पिभिः संस्कारं लब्ध्वा शिल्परूपेण परिणमय्य विग्रहात्मना देवालयेषु पूजां लभते । एवं रीत्यैव पाणिन्यादिभिः महर्षिभिः वैयाकरणैः सम्यक् कृतं प्राकृतमेव संस्कृतं वाङमयं भवति । एतत्संस्कृतवाङमयमेव षडङ्गरूपेण चतु-

वेदात्मना च लोकस्य वाङ्मयस्य च तुष्टिं पुष्टिं च करोति । किं च एतत्संस्कृतवाङ्मयं सर्वभाषाऽपेक्षया प्रथमं वैयाकरणैः सम्यक् कृतं । तस्मादस्य वाङ्मयस्य संस्कृतमिति नाम शाश्वतिकं बभूव । एतत्संस्कृतभाषायां विद्यमानाः उपनिषदः प्रजानां आध्यात्मज्ञानं जनयति । तथा च धर्मशास्त्राणि नीतिशास्त्राणि अर्थशास्त्रं च विद्यन्ते । यन्त्रशास्त्राणि आयुर्वेदविद्या शस्त्रास्त्रविद्या च वर्तन्ते । एतत्संस्कृतवाङ्मयात् अनूदितानि एव बहूनि पुराणानि अर्थशास्त्रादीनि अन्यभाषासु दृश्यन्ते । संस्कृतव्याकरणपद्धतिमवलम्ब्यैव अन्यभाषाव्याकरणग्रन्थेषु पारिभाषिकपदानि दृश्यन्ते । बह्वीषु भाषासु पारिभाषिकपदानि नामानि च संस्कृतवाङ्मयस्थ व्याकरणन्यायालंकार ग्रन्थेषु विद्यमानान्येव शब्दतः अर्थतः च गृहीतानि दृश्यन्ते । अतः एव इयं संस्कृतभाषा सर्वभाषाणां मातृभूतेति च वदन्ति । तस्मादिमां भाषामातरं सकलविज्ञानखनिं संस्कृतभाषां पठित्वा सर्वेऽपि विज्ञानिनो भवन्तु, आत्मतृप्तिं लभन्तां सर्वे जनाः, इति सर्वान् जनान् सप्रश्रयं प्रार्थयामहे । ***

## मातृपितृगुरूणां महत्त्वम्

पितरं मातरं विद्यामन्त्रदं गुरुमेव च ।
यो न पुष्णाति पुरुषो यावज्जीवं च सोऽशुचिः ।।
सर्वेषामेव पूज्यानां पिता वन्द्यो महान् गुरुः ।
पितुः शतगुणा माता गर्भधारणपोषणात् ।।
माता च पृथिवी रूपा सर्वेभ्यश्च हितैषिणी ।
नास्ति मातुः परो बन्धुः सर्वेषां जगतीतले ।।
विद्या-मन्त्रप्रदः सत्यं मातुः परतरो गुरुः ।
नहि तस्मात् परः कोऽपि वन्द्य पूज्यश्च वेदतः ।।
तस्माद् विद्यागुरु पूज्यः पूज्यौ च पितरौ सदा ।
येषां शुभाभिराशीर्भिः कल्याणं जायते नृणाम् ।।

# गांधीकथा

रचयिता– विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

नवरसेष्वन्यतमः हास्यरसः । आबालवृद्धस्यापि चित्तं प्रसादयति रसोऽसौ । "The burden of self is lightened when I laugh at myself" इति विश्वकविः रवीन्द्रनाथटाकूरमहाशयः वदति "देशस्य दीनदलितस्योद्धारकार्येषु सत्याहिंसापरिपुष्टेषु सर्वदा मग्नोपि महात्मा गान्धी कदाचित् रसममुं सम्भाषणावसरे वर्षति स्म" ।

"मीराभगिनि ! अहं महात्मा गान्धीमहोदयस्य दर्शनाकांक्षी । पूर्वं ते जनकस्य नौसेनाधिकारिणोऽधीनताया महमासम् । एतद्दिनेषु मम जामातैव महात्मने अजाक्षीरं आनीयात्र वितरति । अतः कृपया गांधी-दर्शनावकाशः दापयितव्य इति प्रार्थयामास कश्चन बृद्धः महात्मनः परिचारिकां मीराभगिनीं प्रति ।

तदानीं महात्मा "Round Table Conference" (वर्तुलपादफलकपरिषद्) कृते लण्डन् महानगर आगत आसीत् । मीरायाः कृपया बापूमहाशयस्य दर्शनदिवसः समयश्च निश्चिताबभूताम् ।

"पराधीनशृंखलाग्रस्तायाः भारतजनन्याः बन्धनमोक्षकार्ये तत्र भवतां साफल्यं लभताम् । अहं प्रथमविश्वसंग्रामवेलायां नौसेनायामासम् । यद्यन्यः समरोऽभविष्यत् नाहं तत्र सम्मिलितो भविष्यामि सर्वथा । अहं युद्धविरोध्यद्य, अहिंसावादी च । तदुद्देश्यपूर्त्यै मत्तनुजातैस्साकं कारागृहमपि प्रावेष्टुं सिद्धोऽस्मि" इत्युद्वेगेनाब्रवीत् गांधीमहोदयं प्रति तद्दर्शनार्थं महाशया समागतः निवृत्तसेनाकर्मचरः प्रतिज्ञापूर्वकम् ।

"कियन्तस्ते तनयाः गृहमलंकुर्वन्ति" ?

"अष्टौ" । "अपि अष्टौ" ?

"बाढम्, चत्वरः पुत्राः, अवशिष्टाः पुत्र्यः" । "तर्हि भवान् भाग्यशाली । मम केवलं चत्वारः तनया एव सन्ति, न स्त्री संततिरेकापि, अतः अस्यां स्पर्धायां सर्वथा पराजितोऽस्म्यहम्" । त्वत्सम्मुखे मम प्रतिज्ञा अर्धमेव अवशिष्यते" ।

महात्मनः प्रतिवचनमेतत् श्रुत्वा तत्रस्थितास्सर्वे हास्यवाहिन्यां अमज्जन् । ***

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु

## परिपालकवर्गः

(१९७४ -- ७९)

प्रधानपोषकी –

**डा० सरोजिनी महिषी,**

विलासयात्रापौरयानविभागमन्त्रिणी, नई दिल्ली.

पोषकः –

**श्री वासुदेव द्विवेदिशास्त्री,**

सार्वभौमसंस्कृतप्रचारकार्यालयः, वाराणसी.

गौरवाध्यक्षः –

**श्री माडभूषि अनन्तशयनं अय्यंगार्यः,**

भूतपूर्वः बीहारराज्यपालः,

अध्यक्षः, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति.

अध्यक्षः --

**डा० बेजवाड गोपालरेड्डिः,**

भूतपूर्वः उत्तरप्रदेशराज्यपालः, नेल्लूरु,

अध्यक्षः, साहित्य अकाडमी, हैदराबाद्.

उपाध्यक्षः –

**श्री पी. राजगोपाल नायुडु,** M. L. C.

चित्तूरु.

कार्यदर्शी –

**श्री यन्. रामनाथार्यः,** B. A., B. L.,

अड्वोकेट्, चित्तूरु.

उपकार्यदर्शी –

शिरोमणिः, विद्वान् श्री यं. वरदराजं पन्तुलु,
काञ्चीपुरम्.

कोशाधिकारी –

श्री मदल्लपल्लि कन्नय्यश्रेष्ठी,
वणिक्, चित्तूरु.

सभ्याः –

१. श्री सि. वेंकटरमण अय्यर्,
अडवोकेट्, चित्तूरु.

२. श्री के. लक्ष्मणशास्त्री,
भूतपूर्वः उपविद्यानिर्देशकः, हैदराबाद.

३. श्री बि. शेषाचार्यः,
तिरुपति.

४. श्रीमती आर्. रत्नाबायी श्रीनिवासराव्, M. P.
चित्तूरु.

५. प्राचार्यः आर्. करुणाकरन्,
प्रांशुपालः, केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति.

६. चित्पुरमण्डलाधीशः,

७. श्री सि. मार्कण्डेयशास्त्री,
उपविद्यानिर्देशकः, हैदराबाद. (आं. प्र.)

८. श्री के. वि. यन्. अप्पाराव्,
प्रांशुपालः, आन्ध्रगीर्वाणकलाशाला, कोव्वूरु.

९. श्री बि. यन्. रामस्वामिशास्त्री,
गोबिचेट्टिपालयम्.

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु

## कार्यवर्गः

(१९७४ -- ७६.)

प्रधानमन्त्री -

विद्वान्
**श्री बि. शेषाचार्यः,**
तिरुपति.

परीक्षामन्त्री -

विद्याशिशारदः, न्यायरत्नः, न्यायभूषणः, शिरोमणिः,
हिन्दीविशारदः,
**श्री के. श्रीनिवासाचार्यः,**
मद्रपुरी.

निधिमन्त्री -

विद्वान्, साहित्यशिरोमणिः,
**श्री पि. सुब्बराघवय्यः,**
चित्तूरु.

प्रचारकमन्त्री -

**श्री एन्. अनन्तरामशास्त्री,** M. A.
गुण्टूरु.

प्रकाशकमन्त्री -

साहित्यशिरोमणिः,
**श्री के. मुनिरेड्डिः,**
चित्तूरु.

सभ्याः –

१. श्री पि. वि. रमणमूर्ति, M. A.
   चित्तूरु.

२. श्री के. वि. राघवन्,
   विजय प्रेस्, चित्तूरु.

३. शिरोमणिः, शिक्षाशास्त्री श्री के. यम्. मुरलीधरन्,
   पाकाला.

४. शिरोमणिः श्री ए. वरदराजन्,
   चित्तूरु.

५. श्री ए. गोविन्दराजुलु शेट्टि,
   चित्तूरु.

६. श्री सोम श्रीनिवासन्,
   मद्रपुरी.

७. श्री यन्. रामनाथार्यः,
   अड्वोकेट्, चित्तूरु.

८. कोप्परपु प्रह्लादगुप्तः,
   आल्लगड्डा.

# लक्ष्मीसुप्रभातस्तोत्रम्

रचयिता– विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

अरुणकमलसंस्था तद्रजः पुञ्जवर्णा ।
करकमलधृतेष्टभीतियुग्माम्बुजाता ॥
मणिमुकुटविचित्रालङ्कृतिः पद्ममाला ।
भवतु भुवनमाता सन्ततं श्रीश्रियैर्नः ॥

उत्तिष्ठ कमले देवि करुणावरुणालये ।
उत्तिष्ठ कलिदोषघ्ने त्रैलोक्यं मङ्गलं कुरु ॥

त्वत्पादपद्मरुचिरारुणिमाविलासः
पद्मानि पद्मनिलयेषु च पद्मबन्धुः ।
पद्मे ! विकासयति पद्मपदार्चनार्थम्
श्रीलक्ष्मिदेवि वरदे तव सुप्रभातम् ॥

प्रातः प्रशान्तसमयोऽद्य जगन्निवासे
गुञ्जन्ति मञ्जुमधुपाः विकचाब्जषण्डे ।
आवाति मन्दमिह शीतसुगन्धिवायुः
श्रीलक्ष्मिदेवि वरदे तव सुप्रभातम् ॥

कूजन्ति पञ्चमरवेण पिका द्रुमेषु
केकारवेण मधुरञ्च मुहुर्मयूराः ।
त्वत्पूतनामनिवहं तु शुका रटन्ति
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

दिव्यापगा विमलनीरकृतावगाहाः
भक्ता वसन्ति पुरतस्तव निर्मलाङ्गाः ।
पूजार्हवस्तुनिकराः करयोर्लसन्ति
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

राकाशशाङ्कनिभसुन्दरवक्त्रशोभे
राजाधिराजविनुते रजनीचरघ्ने ।
राजीवनेत्रयुगले रजसां निहन्त्रि
श्रीरङ्गराजवनिते तव सुप्रभातम् ॥

विप्रेन्द्रशापफलतस्त्रिदिवेन्द्रलोकम्
त्यक्ते, सुरासुरकरैर्मथिताब्धिमध्यात् ।
जाते ! जगज्जननि देवि जलेजहस्ते
जाये जनार्दनविभोस्तव सुप्रभातम् ॥

प्रेम्णा वशीकृतनिजेश्वरचित्तगेहे
मातर्वसस्यविरतं कमले विशाले ।
दीप्ते सुधर्मनिलये वरदे रमे हे
श्रीलक्ष्मिदेवि भवतात्तव सुप्रभातम् ॥

इन्द्रादिदेवगणवन्दितपादपद्मे
पद्मालये परमपूरुषपार्श्वशोभे ।
शोभाकरे करविशोभितपद्मयुग्मे
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

सम्पत्प्रदे सकललोकसमर्चिताङ्घ्रे
साम्ना सुगीतविभवे सकलार्तिनाशे ।
संस्थापिते मणिघटै स्सुरसामजैर्हे
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

रामावतारसमये जनकात्मजे त्वम्
कृष्णाकृतौ भवसि भीष्मकभूपजाते ।
कामाक्षि कम्रनयने कविलोकवन्द्ये
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

ब्राह्मी विरञ्चिमुखमध्यकृताधिवासा
श्रीः कैटभारिहृदयैककृताधिवासा ।
गौरी त्वमेव गिरिशार्धकृताधिवासा
श्रीरङ्गराजविभवे तव सुप्रभातम् ॥

देवि ! प्रभावमतुलं तव देवदेवः
शम्भुर्विधिश्च नहि वक्तुमलं बलञ्च ।
पद्मार्चिते परममङ्गलशीलरूपे
श्रीरङ्गराजवनिते तव सुप्रभातम् ॥

जाम्बूनदप्रतिमचारुशरीरशोभे
जाम्बूनदांशुकधरे जपितार्तिनाशे ।
जाम्बूनदाभरणमण्डितसर्वकाये
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

दारिद्र्यदावदहनाशु विनाशशीले
देवाधिदेवनुतदिव्यपदारविन्दे ।
देवेशि ! दुष्टदितिजौघविनाशदक्षे
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

स्तोत्रेण देवि तव शङ्करदेशिकेन्द्रः
दारिद्र्यमग्नगृहिणी निलयाग्रदेशे ।
चामीकरामलकवृष्टिदकीर्तिकीर्तः
क्षीराब्धिराजतनये तव सुप्रभातम् ॥

त्वद्ध्यानतश्च वसुधे वरतुङ्गभद्रा
तीरे गुहानिलयदेशगतो यतीन्द्रः ।
कर्णाटराज्यनवनिर्मितदक्षभूतः
क्षीराब्धिराज्यतनये तव सुप्रभातम् ॥

ब्रह्मात्मिके सृजसि लोकममुं समस्तम्
विष्णवात्मिकेऽवसि कृपाकलितान्तरङ्गे ।
अन्ते विनाशयसि देवि शिवस्वरूपे
क्षीराब्धिराजतनये ! तव सुप्रभातम् ॥

जयतु जयतु लक्ष्मीर्लक्षणालङ्कृताङ्गी
जयतु जयतु पद्मा पद्मसद्माभिवन्द्या ।
जयतु जयतु विद्या विष्णुबामाङ्कसंस्था
जयतु जयतु सम्यक् सर्वसम्पत्करी श्रीः ॥

विज्ञानवृद्धिं हृदये कुरु श्रीः
सौभाग्यवृद्धिं कुरु मे गृहे श्रीः ।
दयासमृद्धिं कुरुतां मयि श्रीः
सुवर्णवृद्धिं कुरु मे गृहे श्रीः ॥

चन्द्रप्रभे नमस्तेस्तु चन्द्ररूपे शिवङ्करि ।
चन्द्रानुजे नमस्तेस्तु नमस्ते परमात्मिके ॥

सिद्धलक्ष्मीः मोक्षलक्ष्मीः जयलक्ष्मीः सरस्वती ।
श्रीर्लक्ष्मीः वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥

मङ्गलं मङ्गलापाङ्गे मङ्गलं लोकवन्दिते ।
मङ्गलं ते वरारोहे मङ्गलं हेममालिनि ॥

श्री यन्. रामनाथार्यः.

[पूर्वानुबन्धः]

धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः स्मशाने ।
देह श्चितायां परलोक मार्गे कर्मानुगो गच्छति जीव एकः ॥

At the time of death, the soul alone departs along with the results of one's Karma leaving behind the wealth earned in this world, the cattle in their shed, the wife infront of the house, the relations in the burial ground and its body in fire.

सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा ।
अहं करोमीति वृथाऽभिमानः स्वकर्मसूत्रग्रथितोऽहि लोकः ॥

It is sheer ignorance to feel that pleasure and pain are caused by others. They are not caused by anyone. It is presumtuous to think that I am the cause of the results of any action. Everyone is bound by the results of his past actions.

गुणैः सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः ।
अनर्घमपि माणिक्यं हेमाश्रय मपेक्षते ॥

Eventhough endowed with great qualities, everyone feels helpless without the assistance of others; the most precious ruby does not shine without being set in gold

गुणिनं जनमालोक्य निजबन्धनशङ्कया ।
राजन्! लक्ष्मीः कुरङ्गीव दूरं दूरं पलायते ॥

Goddess Lakshmi runs away from a person of noble qualities, like a deer to a great distance, apprehending that she would be tied down by his noble qualities.

अहो! नु कष्टः सततं प्रवासः ततोऽतिकष्टः परगेहवासः ।
कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥

It is difficult to be continuously absent abroad from one's native place, still more difficult to reside in others houses; it is difficult to serve under a low person, and it is still more miserable to be always penniless.

सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः ।
तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥

Artists there are who can manufacture golden lotuses; but the Creator alone is capable of infusing fragrance into them.

(अनुवर्तते)

**"अवरः"**

स समयः ! स समयः ! !
अथाऽपि नाऽयं समयः कुसमयः ।
ते धन्या अनन्यसामान्याः;
तथाऽपि नेमेऽगण्या अमान्या अनभिज्ञा वा ॥

गौरवगरिमा स्यादेव हिमालयोत्तुङ्गः !
किमणोरणीयस्त्वं प्रेमास्पदं न भवति ?

सर्वगात्रशोभायमान मेवोत्तमाङ्गम् !
अपि तु जघन्यं नैव हि पदकमलं पुरुषोत्तमस्य ! !

अविभक्तनामरूप मेवासीत्तदद्वितीयम्;
प्रविभक्तनामरूपं किमिदं द्वितीयम् ?

वेदा वा तदन्ता वा तदङ्गानि वा सन्तु नाम कामम्,
किं तेषां मीमांसा पूर्वोत्तराभिधानाऽऽसीत् ?
अधुना यद्विज्ञातं जिज्ञास्य च,
तदपि च मीमांसाशास्त्रेऽन्तर्भवति न किम् ?

कवयः क्रान्तदर्शिनः पुराऽभवन्;
ऋषयः तत्त्वदर्शिनः पुराऽभवन्;
कमनीयं कवनमार्षं च विज्ञानम्
पुराणमित्येव साधु मन्तव्यं किम् ?

"नवो नवो भवति जायमानः"
"अजायमानो बहुधा विजायते"
किमयं प्रागुक्तेर्भावः स्वभाव इति निरस्यते ?
अधुना किं भवतीति विवेकः कर्तव्यो वा न वा ?
सर्वं किल नवं नवं भवितु मुत्सहते !
जायमान एव हि वर्धमानो दृश्यते ;
वर्तमानः प्रवर्तमानस्सन् परितः परिवर्तते !

यदासी दास्तां नाम कामम् ;
यदास्ते तदस्तु नाम कामम् ;
यद्भविष्यति तेन कथं भाव्यमिति प्रश्नो जागर्ति न किम् ?

'वृत्तान्तकथन मितिहासोऽस्तु'
वर्तमानस्थितिगतयो जीवनप्रवाहोऽस्तु
भविष्यत्कथं भावाकांक्षेव जीवनलक्ष्यं कथं न भवेत् ?

सोऽयं देवदत्तः तदिदमितिबुद्धिं द्रढयन्
पुरोगति मभिलषन् पुरोहितमुपसरन्
पूर्वरङ्गमभिनयति पुरोभागिनोऽपद्पन्तु
"अपहताऽसुरा रक्षांसि" मन्त्रपूतं भवतु ॥

# ई. वे. रा. न तु नास्तिकः

श्री पि. यम्. पद्मनाभशर्मा, तञ्जपुरी.

आसीद्भूमिसुतो नाम नरकोऽसुरनायकः ।
कर्मणा मनसा वाचा क्रूरकर्मा जनार्दनः ॥

पीडितास्तेन लोकाश्च भगवन्तं जनार्दनम् ।
शरणं प्राप्य, वृत्तान्तं नारकं तं व्यजिज्ञपन् ॥

अधर्मस्य विनाशाय धर्मस्य रक्षणाय च ।
भगवांस्तु तदा कृष्णः भूम्यामवततार ह ॥

तस्य पत्नी सत्यभामा पृथिवीरूपिणी मता ।
तां भार्यां रथमारोप्य योद्धुकामो जनार्दनः ॥

प्रतस्थे नरकेणैव चिरं युद्धं चकार सः ।
परन्तु भगवान्हन्तुं नरकं न शशाक ह ॥

भामाऽरुणितनेत्राब्जा जघान नरकं ततः ।
प्रार्थयामास नरको म्रियमाणो विभुं तदा ॥

पीडिता हि मया लोकाः मयि जीवति ते नराः ।
नोऽभवन्सुखिनस्सर्वे, प्रार्थयेऽहं मृते मयि ॥

प्रतिवर्षमुषःकाले तैलेनाभ्यक्तगात्रकाः ।
स्नात्वा कोष्णे जले सर्वे नववस्त्राद्यलंकृताः ॥

भक्ष्यं भोज्यं तथा लेह्यं भुक्त्वा तृप्ता भवन्तु ते ।
पटाकैर्धूमदीपैश्च मानयन्तु मुदान्विताः ॥

मन्नाम्ना तद्दिनं लोके प्रसिद्धं तु भवत्विति ।
तदङ्गीकृत्य भगवान्भामया सहितोऽनघः ॥

पुरं निवर्तयामास रथं साङ्ग्रामिकं तदा ।
जनानामर्दने कण्डूः नरकस्य न नाशिता ॥

स एव नास्तिको भूत्वा रामस्वामीति कीर्तितः ।
द्विजानां पीडने नित्यं वेदानां दहनेऽपि च ॥

देवानां दूषणे नित्यं प्रतिमानां च नाशने ।
ई. वे. रा. इति नाम्नाऽथ तत्परोऽभूद्विशेषतः ॥

स्वचित्तभावना शास्त्रं, स्ववागेव हिता मता ।
स्ववचांस्येव वेदाञ्चाशिक्षयद्द्राविडानिति ॥

द्राविडा अपि तच्छिष्या नास्तिका वेददूषकाः ।
आलयानपि निघ्नन्तः घ्नन्तो विप्रांश्च शास्त्रिणः ॥

कृष्णरक्ताम्बरधराः राक्षसा एव बभ्रमुः ।
काले गते, तदा विप्राः पीडिताः, कालरूपिणम् ॥

भगवन्तं प्रार्थयन्त पीडेयं ह्रियतामिति ।
भगवानपि तान्प्राह ब्राह्मणा वेदपारगाः ॥

पूर्वं हिरण्यकशिपू रावणो वा महाबलः ।
पीडयामासतुस्सर्वाञ्जनांस्तावहनं वरम् ॥

ई. वे. राऽयं महासत्वः मेधावी वा तथा न हि ।
तेन कालेन महता हनिष्यामि न चिन्त्यताम् ॥

नवत्या त्रिषु वर्षेषु गतेषु काल एव हि ।
जहाराऽऽगत्य ई. वे. राप्राणान्निश्चेष्टतां गतान् ॥

प्रार्थयामास ई. वे. रा. कालं कृष्णाम्बरं विभुम् ।
नतोऽस्मि भगवन्नाहं नास्तिको नैव निर्घृणः ॥

जनसङ्घस्तु मूढोऽयं दुराचारी सुदुस्सहः ।
गृह्णाति विपरीतं हि मन्दबुद्धिर्मदावहः ॥

उपादिशमतो देव देवो नास्तीति भूतले ।
देवं द्विजं तथा वेदमालयं परिणाशय ॥

तीव्रे कृते प्रचारे तु विपरीतग्राहिणो जनाः ।
आस्तिका देव, देवादिमन्दिराणां च सेवकाः ॥

संवृत्ताः पूजका नित्यं वेदवेदान्तपाठकाः ।
बभूवुस्तूर्णमेवाद्य सभ्यास्स्वाचारतत्पराः ॥

अतोऽहं नापराधीति कथयामि पुनःपुनः ।
यथा वा बहुभिर्भक्तैर्भक्तिस्सर्वत्र सार्यते ॥

तथैकेन मया देव गुणिता सा प्रसारिता ।
अतोऽहं प्रार्थये देव मृते मयि द्विजा जनाः ॥

प्रतिवर्षं मम दिनं मानयन्तु शुचिव्रताः ।
* स्नात्वा पितॄन्तर्पयन्तु प्रीणयन्तु हरिं हरम् ॥

इत्येवं प्रार्थितस्तेन भगवान्कालरूपधृक् ।
मन्दस्मितो महाभागः व्याजहार मृतं च तम् ॥

ई. वे. रा, तव कृत्येन तुष्टः प्रीतोऽस्मि सर्वदा ।
स्वीकृता प्रार्थना तेऽद्य, परन्तु तव भावना ॥

---

* अमावास्यायामयं मृतः इति कारणात् कृतेयं कल्पना ।

शोभना वा न वा युक्ता निरयं ते ददाम्यहम् ।
इत्युक्त्वा भगवान्तत्र कालरूपी तिरोदधे ।।

अतो बाला महाभागाः, यूयं भवथ चास्तिकाः ।
अन्यथा निरयं याथ यथाऽयं द्विजघातुकः ।।

इति बालकविकृते कन्दलपुराणे प्रथमोऽध्यायः ।।

डा. वे. आंजनेयशर्मा, श्रीवेङ्कटेश्वरविश्वविद्यालयकलाशाला,
तिरुपति.

वियद्विताने विमले विनीले ज्योतिर्मया भांति विलोलगोलाः ।
वसुंधराप्रेंखनिवेशितानां विनोदनाः प्राणिकिशोरकाणाम् ।।
आंदोलयन्ती महतीं च डोलामाचालयन्ती कमनीयगोलान् ।
अव्यक्तगानं च समालपन्ती प्रस्तापयत्यर्थकबृंदमम्बा ।।
अनर्थवांछापरिखिन्नचित्ताः इतस्ततः संभ्रमतश्चरित्वा ।
स्वपन्ति निद्राबलमीलिताक्षाः निशम्य गीतं शिशवो जनन्याः ।।
वात्सल्यपीयूषभरैस्तदीयैर्मन्दैः कटाक्षैर्बहुमान्यमानाः ।
तस्याः करस्पर्शमुदातिदृप्ताः सुप्ताः सुखं निश्चलगात्रचेष्टाः ।।
अनिंदितं शान्तिसुखालवालं चकास्ति सौंदर्यमिदं प्रसन्नम् ।
यद्वीक्ष्य तस्यापि निदानभूतं परात्परं धाम विचिंतयेम ।।
हंत पश्यत सौभाग्यमेतस्याः शर्वरीश्रियः ।
यदा सेचनकं दृष्टेः फलं च क्षुष्मतां महत् ।।

# मूल्यांकन - यज्ञ - वाटिका

(Spot Valuation Centre)

" अवरः "

* १५–५–७४ दिनादारभ्य २६–५–७४ दिनाङ्कपर्यन्तं चितूरुनगरे प्रवृत्तं "स्पाट्वेल्युएषन्" कार्यमधिकृत्य स्वच्छन्द-कविताशैली मनुसृत्य–

कोऽय महर्वित् सत्र मारभते महर्षिः ?
कतिदिवसै रवसानमय यज्ञस्समेष्यति ?
कमिषनरः सर्वकार परीक्षाधिकारी ननु यजमानः !
प्रतिमण्डलं डि. इ. वो. ऋत्विजः किल बद्धकङ्कणाः !
यज्ञ-भूमि निर्देशनं होतॄणां उद्गातॄणां च नियमनं किल तदधीनम् :
सत्रारभे हि –
"सगच्छध्वं संवदध्वं" इति मन्त्रार्थः स्मारिताः
परीक्षका स्समीक्षका स्समेऽपि ।
मूल्यांकन-यज्ञवाटिकायां
अङ्कनकार्ये प्रवृत्ते
तत्तद्देशे देशे दिने दिने
युगपत् भिन्न-भिन्न विषयेषु
शतशः सहस्रशो हि लेखिन्यः
करेषु चर-चर-सर-सरायमानाः
प्रदित्सन्त्यङ्कान् शतशोऽथ सहस्रशः

परीक्षार्थिनः कत्युत्तीर्णाः कति वा अनुत्तीर्णाः
नैवं विचिकित्सा परीक्षकाणां अथ समीक्षकाणाम्
अङ्कसूची निर्माणमेव लक्ष्यं विधायेव,
त्वरन्ते लेखनायुधैः चित्रविचित्ररेखा-लेखनैः।
उत्तर-पत्राणि क्वचि दधोरेखाभिश्चेत्
क्वचि त्क्वचिदूर्ध्वतिर्यग्रेखाभिः साध्वसाधु वदन्तीभिः
वामपार्श्वेषु यथोचितं प्रश्नांकसंख्याभिश्च
शोभायमानानि रक्तमष्या परीक्षकाणां
नील-हरित-लेखाभिरपि समीक्षककृताभिः
तत्र तत्र शोभातिशयं पुष्णन्ति।

ननु परीक्षा-फलप्रकटनार्थं मयं किल महोद्यमः!
द्वादशाह महायज्ञः!!
यज्ञसंभाविताः परीक्षकाः समीक्षकाश्च
यातायात-दैनंदिन-भृतिभिः
अग्रिम द्रविण-वितरण-सन्तर्पणेन
सत्रान्तेऽवभृथे–

ऋत्विजां होतॄणां उद्गातॄणां च
यथाविधि यथोचित संभावनाभिः विमोचनपत्रैश्च

आमन्त्रणोत्सवं कुर्वन् यजमानः
दीक्षाविसर्जन करोतीव!
यशस्वी यजमानो नः कल्पताम्
स्पाट्-यज्ञः समिन्धतां काले काले
यजमानप्रतिनिधिः DEO महाशयः आशिष्ठः स्वीकरोतु।

# अशोकवनिकाभञ्जनं - हनूमद्बन्धनञ्च

**रचयिता – श्री मेडिशेट्टि शिवगणेश्बाबु, पेद्दापुरम्.**

अशोकवनिकां प्रविश्य यथाकथञ्चित्, ददर्श च रामदयितां, राक्षसीगणतर्जितां च सीतां बुद्धिमान् हनूमान्। आरुह्य शिंशुपावृक्षं बहुधा विललाप च रामवियोगाद्भुवि लुठन्तीं तां दृष्ट्वा। त्रिजटाकृतस्वप्ननिवेदनानन्तरं तामात्मत्यागाय स्पृहयन्तीमाश्वासयितुं बभूव नेदीयान् तस्याः। ततः स रामभक्तः सीताकर्णयोः रावणदुर्वचनजातव्रणयोः पातयित्वा रामप्रशंसामधूनि, अकरोच्च तस्यां विश्वासोत्पादनं। रामसन्देशादि श्रवणानन्तरं राममुद्रिकामदात् सीतायै। आनन्दस्य कोटिं पराम‍धिरूढा सा सीताऽपि रामाय निवेदितुमाञ्जनेयमवोचत् – "मासादूर्ध्वं न जीविष्ये त्वया हीना नृपात्मज" इति। ततः अभिज्ञानवाचिकम् काकासुरवृत्तान्तमुक्त्वा, दत्तवती च चूडामणिं कपिवराय। हनूमानपि तां गृहीत्वा सीतासमीपात् प्रतस्थे। ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकाशयितुमशोकवनिकां प्रबभञ्ज प्रभञ्जनात्मजः।

स्वकृत्यैः शाखानामवनतिमतीव प्रकटयन्, अमार्गेण भ्राम्यन्, परिकलितभङ्गः सुमनसाम्, द्विजानां सन्त्रासं श्रुतिमधुरवाचां विरचयन्नयं हनूमान् लङ्कोद्याने दशवदनलीलामतनुत। (रावणोऽपि कठकौथुमादिवेदभागानां समधिकामवनतिम् प्रकटयति, लोकविद्विष्टवर्त्मना व्यवहरति, देवानामवमानं रचयति, वेदसुन्दरगिरां ब्राह्मणादीनां भयं विधत्ते, तदियं रावणलीला समानशब्दाभिधेयतया हनूमताऽनुकृतेति भावः)

तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदावनभञ्जन - प्रकुपितदशवदनप्रेषितान् पितृपतिकिङ्करभयङ्करान्किङ्करान् प्रहस्तपुत्रेण जम्बुमालिना सह निहत्य चैत्यतोरणमुपगतवति हनूमति पुनरपि आकर्णितामितनिशिचरगणमारणो रावणः सचिवान्पञ्च पञ्चाननपराक्रमान् प्रहसनप्रमुखान् वानरम् जीवग्राह गृहीध्वमिति प्राहिणोत् । तत्र तानपि तोरणस्थितार्गलदण्डेन पञ्च पञ्चतां नीत्वा मुहुर्मुहुः 'दाशरथि दूतोऽहम्' इत्यात्मानमुद्घोषयन्तं हनूमन्त नियन्तुं लङ्काधिपः स्वपुत्रं सैन्याध्यक्षमक्षकुमारमध्यक्षिपत् । रावणस्य प्रासादं वक्ष संघर्षेण पातयित्वा तदुत्थितया स्वर्णधूल्या आकाशमकालेऽरुणीकुर्वन् वीरश्रियायुतोऽसौ हनूमान् रक्ष - शूरान् अक्षगुटिकारूपान् पृथ्वीतलेऽक्षपदरूपे निपात्य प्रवर्त्तनीयामक्षकुमारमृत्युरूपां द्यूतपाशरूपामक्षक्रीडां कर्तुं रावणपुरप्राङ्गणे त्वरया आययौ ।

तोरणभङ्गाक्षवधरूपं हनूमत्कृत्यमाकर्ण्य रावणो युगपदेव स्वानि सर्वाणि नयनानि स्वपुत्रे मेघनादे युद्धार्थं सज्जीभवितुमाज्ञापयन्निव निचिक्षेप । ततः 'अनिमिषभुवने वा, व्योम्नि वा, भूतले वा समरमुपगतं त्वां वीक्षितुं कः समर्थः' इति नुतिवचनेन मेघनादं श्लाघयन् प्लवगमिह नयेति प्राहिणोद्राक्षसेन्द्रः । निशाचरपतेः शोकरस नेतुं, रक्षसां चमूं हन्तुं, तस्यान्त पुरयोषितां मानं विना रोदनम् रचयितुं च सूर्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमग्निना शुद्धां कर्तुं हनूमतः इन्द्रजिता सह तोरणे रणः जातः । यथा जलवर्षिणि मेघाच्छन्ने दिवसे घनगर्जितेन मयूरो मुदमुपयाति, तथैव बाणवर्षायुते तत्र युद्धे संदृशयोद्धृलाभात् मेघनादेन मारुतिः प्रसन्नतां प्राप्तवान् ।

तत्पश्चात् राक्षससेनानायकविनाशकुपितः दशकन्धरात्मजः हनूमदुपरि प्रयुज्यमानानां नानाविधानमस्त्राणां वृथात्वं विभाव्य

विजयश्रीसनाथम् वायुपुत्रं ब्रह्मास्त्रेण बबन्ध। तेन दिव्यास्त्रेण विवशशरीरमेनं राक्षसाः शणवल्कलैः बबन्धुः। सः राक्षसरज्जुकृतः हनूमतः बन्धः पुरा पुलस्त्यकुलकलङ्कभूतेन रावणेन बन्दीकृतानां सुरसुन्दरीणाम् बन्धविमोक्षहेतुः अभवत्। (बद्धतया कुपितेन हनूमता लङ्कादाहादिना तथा करणात्) इत्थं लङ्कादहनादिकरणात देवाङ्गनाबन्धमोक्ष, सर्वसज्जनहृदयानन्दं, जानकीशोकनाशनं च कृतवान् स अञ्जनानन्दनः,वीरः, कपीशः, हनुमान्। अधुनाऽपि सः भूतप्रेतपिशाचभयविदारकः अस्ति। अत एव सः निखिलप्राणिकोटिभिः सर्वदा सर्वथा स्मरणीयः, अर्चनीयश्च।

अञ्जनानन्दनं वीरं
जानकीशोकनाशनम्।
कपीशमक्षहन्तारं
वन्दे लङ्काभयङ्करम्॥

## ग्रीष्मऋतुः

**कविः काव्यतीर्थ ज. व्यं. पल्लेवारः उपाख्यः जयेशः,** M.A. LL.B.
**पुसद. (महाराष्ट्र)**

सहस्त्ररश्मिप्रभवस्य तस्य सूर्यस्य तेजः सुखदं न किंचित्।
कांक्षन्ति सर्वेऽपि हिमांशुतेजः ग्रीष्मागमेण ग्लपितप्रमोदाः॥
शिरीषपुष्पानि च पाटलानि समीरणस्पर्शनमेवसौम्यम्।
भवन्ति मोदाय न कामिनीनां निदाघघातेन हलांगनानाम्॥
ग्रीष्मस्य गर्भे स्थितजेष्ठमासे चंडांशुचंडप्रतिरूपचेष्टाः।
स्वेदस्नुतांगाः परिशुष्ककठाः तोयं प्रयान्ति प्रसभं तृषार्ताः॥
निदाघघातात्परितप्तकायाः शीतोदकस्नानकृते धृताशाः।
विहाय वैरं पशवः वनस्थाः सपंककासारजलं विशन्ति॥
प्रचडचंडांशु विचीर्णभूमिः विमृष्टशस्यावटुतांगभूषा।
ऐश्वर्यतृप्ता कृषिकामिनीव ग्रीष्मागमेन प्रतिभाति शीर्णा॥

# पुस्तकसमीक्षा

दयानन्दसन्देशः (सृष्टि-संवत्-विशेषाङ्कः)
(आर्षसाहित्य-प्रचारट्रस्टस्य मासिकं पत्रं)
सम्पादकः– राजवीरशास्त्री, एम्. ए.
प्रकाशकः– "दयानन्दसन्देशः" २-एफ, कमलानगरं, दिल्ली-७.
वार्षिकमूल्यम् रू ६–००
प्रत्येकम् रू ०–६०
सृष्टिसंवत् विशेषाङ्कस्य मूल्यम् रू १–५०

अस्मिन् सामयिकग्रन्थे संकलनात्मके (Periodical) सम्पादकेन श्रीमता राजवीरशास्त्रिमहोदयेन (एम्. ए.) सृष्टयादिगताब्दानधिकृत्य कलङ्कषो विचारः प्रस्तुतः।

व्यवहारयोग्येषु भारतीय पञ्चाङ्गेषु सृष्टयादिगतसौराब्दाः १९५, ५८, ८५, ०७५ इति प्रकाश्यते। आर्यसामाजस्थापकेन महर्षि दयानन्देन सत्यार्थप्रकाशिका नामक स्वीयग्रन्थे ऋग्वेदादिभाष्यभूमिकायां च सृष्टिसंवत्सरं अधिकृत्य यत्स्पष्टीकृतं (१९६, ०८, ५३, ०७५ संवत्सराः इति फलितांशः) तदिदं विरुद्धयत इव।

अस्मिन विषये सूर्यसिद्धान्तप्रामाण्योदाहरणे तद्ग्रन्थस्य द्वैविध्यं वसिष्ठकृतत्वेन मयासुरकृतत्वेन चेति प्रकाशितम्। एवं महर्षिदयानन्दोपात्तं सूर्यसिद्धान्तप्रामाण्यं वसिष्ठकृत मिति आर्षं वैदिकप्रामाण्यं न्यरूपि। आर्यविद्वद्भिः कैश्चित मयासुरकृत सूर्यसिद्धान्तप्रामाण्य मुदाहरद्भिः सृष्टिसंवत्सरनिर्णयविषये भ्रान्त मिति च निरूपितम्। ब्राह्मदिने १००० चतुर्युगपरिमितकाले १४ चतुर्दशमनूनां भुक्तभोगकालं चाधिकृत्य विपुलीकृतम्। किंच, सृष्टिकालः इत्यस्य चेतनाचेतनसृष्टिविधया द्वैविध्यं संभवतीति

निरूपितम् । प्रथमं पृथिव्यादि जडसृष्टिः पश्चात् चेतनसृष्टिः इति क्रमेण जगदुत्पत्तिः मानवोत्पत्तिः वेदोत्पत्तिः इत्यादिकं सर्वं कूलंकषविधया अस्मिन् ग्रन्थे विचारितम् । महर्षि दयानन्दस्य मतानुसारेण वेदोत्पत्तिः जगदुत्पत्तिश्च १,९६,०८,५२,९७६ वर्षेभ्यः पूर्वमिति निर्धारितम् । एवं पूर्वोक्तकालं भुक्तकालं एवं भोग्यकालं २,३३,३२,२७,०२४ वर्षानेष्यान् न्यरूपयत् । तथा च ४,२९,४०,८०,००० वर्षाः ९९४ चतुर्युगाणां कालः (७१×१= मन्वन्तरकालः) इति अवशिष्ट षट्चतुर्युगाणां ४३२००००×६४ २५९२०००० वर्षाः सृष्ट्यारंभे जडसृष्टिकाले अतीता इति च सिद्धान्तितम् । एवं रीत्या ४,३२,००.००,००० वर्षाः ब्राह्मदिनपरिमितिरिति एतावत्परिमित एव रात्रिकालश्चेति निरूपितम् ।

ऐतिहासिककालनिर्णये बंभ्रम्यमाणानां विमर्शकानां एतादृशविमर्शग्रन्थाः बहु उपकुर्युरिति गैर्वाणीसन्देशः । वेदकालनिर्णये मानवोत्पत्तिनिर्णये जगदुत्पत्तिनिर्णये च अयं ग्रन्थः विमर्शकानां अत्यन्तोपयुक्तः इति न पुनरुक्त्यपेक्षा । सृष्टिसंवत्सरनिर्णयार्थं प्रवृत्ते अस्मिन् विशेषाङ्के बहूनां विदुषां युक्तिप्रयुक्ताः लेखाः समायोजिताः प्रकाशिताश्च सत्यार्थस्पष्टप्रतिपत्त्यर्थम् ।

आर्षविज्ञानप्रचारे बद्धकंकणान् आर्ष - साहित्य - प्रचारट्रस्ट सम्बन्धिनो महोदयान् प्रकाशकान् सम्पादकान स्वीयै र्लेखैः सत्यार्थं प्रकाशयतः पण्डितांश्च सर्वान् "गैर्वाणी" सहृदय मस्तकं अभिनन्दति सम्मानयति च इति निवेद्यते ।

"अवरः"

---

## सुरभारती समितिः, हैदराबाद्.

सुरभारतीसमिति भवनस्य आधारशिलास्थापनोत्सवसन्दर्भं पुरस्कृत्य प्रकाशितोऽयं विशेषाङ्कः (Souvenir)

यद्यपि सुरभारतीसमितिः भाग्यनगरीया १९७० तमे क्रीस्तवर्षे लब्धप्रतिष्ठा; तथाप्यल्पेनैव कालेन संस्कृतभाषाप्रचा-

राय महान्तं प्रयत्नं करोतीति महान् सन्तोषः साधर्म्यपराणां संस्कृताभिमानिनां समेषाम् । युक्तमेवाभिहितं भवनस्य आधार-शिलास्थापकेन श्रीमता चिन्तामणि द्वारकानाथ देशमुखमहोदयेन यत्—

"वास्तुयागविधि रेषशस्तदो वास्तु संस्कृतहितैषितोषदः ।
वस्तुजातमखिलं च संस्कृता वस्तु वादमपसार्य जीवतात् ॥"

इति ।

अस्मिन् विशेषाङ्के सुरभारतीसमितेः भाग्यनगरीयायाः इतिवृत्तं आमुखीयांग्लनिवेदिकया "अस्मानधिकृत्य" "About Ourselves" इति शीर्षिकया यन्निवेदितमस्ति, नूनं प्रशंसा मर्हति । अधीतिबोधाचरणेत्यादिरीत्या सामयिकानां समावेशानां आयोज-नेन, संस्कृतवर्गप्रचालनेन, साहितीप्रधानानां वाङ्मुखानां (Sim-posium on Max-Muller etc.,) प्रबन्धेन, ग्रन्थाविष्करणादिना च बहुमुखीं सेवां गीर्वाणवाण्याः आतन्वानां सुरभारतीसमितिं हार्देना-भिमानेन अभिनन्दति इयं "गैर्वाणी" ।

"गृहे गृहे च सस्कृतं; मुखे मुखे च संस्कृतम्" इत्यस्या-शयस्य सिद्ध्यर्थं संस्कृताभिमानिनां संस्कृतज्ञानां च संघाः, सभाः, समितयः बहुत्र बहुधा प्रवर्तन्ते । "बहुनामनिकेतेषु बहुनामा बभूव ह" इत्येवं योगमायाविधानं अनुसरन्तीव गीर्वाणवाणी तत्र तत्र तत्तन्नाम्ना स्वाभिमानिनो जनान् तत्प्रमुखांश्च समावेशयन्ती भार-तीयसन्ततौ तदीयां प्राचीनसस्कृतिं प्रबोधयतु काले काले इत्या-शास्महे ।

सुरभारतीसमितेः सरस्वती न केवलं श्रुति महती अपितु "कृतिमहती महीयताम्" इत्याशंसाना वयं समितिं तथा कर्तुं भग-वन्तं श्री श्रीनिवासं प्रार्थयामहे ।

—"अवरः"

"ब्रह्मसत्यं, जगन्मिथ्या; दारपुत्रादयः, बन्धुमित्रादयः धनकनकवस्तुवाहनादीनि वा न किमपि आत्मना सह आगच्छति। सर्वमिदं मिथ्याभूतम्। प्राणापाये शरीरं मृत्तिकायां विलीनं भवति। अतो देहाभिमानस्त्याज्यः" इति आचार्यः उपन्यासन्नास्त।

तमाचार्यं कथञ्चित् पराभावयितुं उद्युक्ताः केचित् दुष्टाः सरहस्यं सभाया निष्क्रम्य, गजशालां गत्वा, तत्रत्यां हस्तिपकं अर्थदानेन प्रलोभ्य मत्तमातङ्गं सभामध्ये यत्र शङ्कराचार्यः अद्वैततत्त्वं उपन्यसन्नास्त अभिद्रावयितु मचोदयन। हस्तिपकः तथैवाऽकरोत्। तदीयाङ्कुशघातान् असहमानः विह्वलो मातङ्गः भयङ्करघीङ्कारेण साक इतस्ततः परिभ्रमन् सवेगमागत्य सभामध्यं प्रविवेश। मदगजागमनेन तत्रस्थिताः सभ्याः सर्वे प्राणभीत्या पलायितु मारेभिरे। तं जनसम्मर्दं कल्लोलितं स्वोपरि भृशमापतन्तं सोढुं अशक्तत्वात् सशिष्यः शङ्कराचार्यः तस्मिन् जनप्रवाहे प्लवमानः तस्मात्प्रदेशात्प्रदेशान्तरं नीतः सुरक्षितश्च।

परेद्यु पुनस्तत्त्वसभायाः प्रारम्भ आसीत्। मत्तगजं प्रेषितवतां दुष्टानां मध्ये कश्चिद्धृष्ट स्सहासमुत्थितः–"स्वामिन! पूर्वेद्युरुपन्यासे सर्वं मिथ्येति किल भवता उपन्यस्तम्। देहाभिमानस्त्याज्य इत्युक्तम्। परन्तु गजागमने पामर इव भवानपि खलु देहाभिमानेन पलायितुमुद्युक्तः" इति स हेलया पप्रच्छ।

शङ्कराचार्य वृत्तं कुटिलव्यापार विज्ञाय तमाततायिन मेव माह– "वत्स! आम्, सर्वं मिथ्यैव यथोक्तम्; गजागमनं मिथ्या, पलायन मपि मिथ्या"। इत्युक्त्वा तं धृष्टं दुष्टं मूकयामास।

## २८. अभिनवगुप्तः

अथ शङ्कराचार्य देशाद्देशं गच्छन् अद्वैततत्त्वं प्रचारयन्नास्त। क्वचि दभिवनगुप्तोनाम कश्चित्पण्डितः शङ्करं वादाय आह्वयत्।

अभिनवगुप्तः व्याससूत्राणां शक्तिपरतया अर्थं ब्रुवन् भाष्यं रचयामास। सः वादे शङ्करं अजय्यं अवगत्याभिनयन् विनयं, "भवदीय भाष्यस्य अग्रे मदीयभाष्यस्य किं वा स्थानं? सूर्यस्याग्रे करदीपिकाया इवास्ति। अतः मदीयं भाष्य मत्याक्षम्। किञ्च, मां तत्र भवान् शिष्यत्वेन परिगृह्णातु" इति अभ्यर्थ्य पादयोः पतितः।

आचार्यः तदुक्तं विश्वस्य तं शिष्यकोटावन्तर्भाव्य तेन सह अङ्ग-वङ्ग-कलिङ्गादि देशानटन् अद्वैततत्त्वं प्रचारयन्नास्त।

आचार्यस्य यशो यथा यथा प्रवर्धमानमासीत् तथा तथा अभिनवगुप्तस्य मात्सर्यमपि प्रवृद्धमासीत्। एकदा स दुश्शीलः सरहस्यं आभिचारिकप्रयोगं कारयित्वा चिकित्साया असाध्यं अतिसाररोगं शङ्करस्य उत्पादयामास, जगाम च स्वमार्गम्।

आचार्यस्य काषायाणां धावनकर्मणि प्रवृत्तः तोटकाचार्यः गुरोः संक्रान्तं अतिसाररोगं बिदित्वा पद्मपादाय अकथयत्। सोऽपि राजवैद्या नानाय्य दर्शयामास। तेषां वैद्यविधानानि सर्वाण्यपि व्यर्थतां गतानि।

अन्तेबासिनः दुःखिता स्सन्तः– "स्वामिन्! निजमाहात्म्येनैव स्वीयव्याधि र्निवारणीय स्तत्रभवता। अस्मदर्थं लोकक्षेमार्थं च तत्र भवद्भिः जीवधारणमास्थेय" मिति प्रार्थयामासुः। आचार्यः शिवं अस्तौषीत्। प्रार्थितः शिवः अश्विनीदेवौ प्रेषयामास। तावपि वैद्यवेषधारिणा वागत्य परीक्ष्य "अयं व्याधिः शाक्तिकप्रयोगात् समभूत्; प्रयोगस्य प्रतिप्रयोग एव निवारणोपाय" इति उक्त्वा गतौ।

"अस्य महात्मनः एतादृशं अपकारं को नु कृतवान् स्यात्" इति विचिन्तयति पद्मपादे "अभिनवगुप्तः कर्त्रे"ति प्रश्नः समुदभूत्। स शाक्तेयः कमपि किमप्यनुक्त्वा तिरोहितः। अत एव हेतोः स

एव प्रयोगकर्ता इति निश्चप्रचम् । कोपाविष्टः पद्मपादः स्वेष्टदेवं अहोबल नृसिंहं समन्त्रक माराध्य अभिनवगुप्तं प्रति प्रतिप्रयोग मकरोत् । शङ्करः क्रमेण स्वस्थोऽभवत् । अतिसाररोग संक्रमणेन अभिनवगुप्तो मृतः ।

## २९. शारदापीठम्

कदाचित् ध्यानसमाधे रुत्थिते शङ्कराचार्ये पद्मपाद स्समुपगम्याह । "गुरूत्तम ! अद्य काचि द्वार्ता श्रुता । काश्मीरदेशे शारदापीठमस्तीति किलोच्यते । तन्मन्दिरप्राकारे चतसृष्वपि दिक्षु चत्वारिह वा द्वाराणि सन्तीति । तत्र महापण्डिताः प्रतीक्षमाणाः सन्तीति । ते च पण्डिताः अन्तः प्रविविक्षून् निरुद्धच विद्यासु परीक्षन्त इति । परीक्षाया मुत्तीर्णा एव प्रवेश मर्हन्तीति । दक्षिणद्वारकवाटः सदापिहित एव वर्तत इति । तत्कारण च एतावत्पर्यन्तं दक्षिणतः न कोऽपि पण्डितः तानजैषीदिति । अतोऽस्माभि स्तत्रगन्तव्यम् । तेषां पाण्डित्यं कीदृशमिति परीक्षितव्यं च" इति ।

आचार्यः तथेत्युक्त्वा शिष्यप्रशिष्यैः प्रस्थाय काश्मीरदेशं प्राप । शारदामन्दिरस्य दक्षिणद्वारमुपेत्य "कवाटोद्घाटनं क्रियता" मित्याह ।

तत्रत्या पण्डिताः "सर्वज्ञस्यैव इतः प्रवेशः" नाऽन्यस्ये त्याहुः । पद्मपादः "श्रीमच्छङ्करभगत्पादाः सर्वज्ञा एवे त्याह । तेऽपि पण्डिताः शङ्करं निखिलशास्त्रेषु कूलङ्कषं परीक्ष्य समुचितसमाधानैः अपूर्वैः विषयविशेषै रुपलक्षितैः भृशं सन्तुष्य तदीयप्रतिभाविशेषं प्रशंसन्तः अन्यद्वारेषु विद्यमानान् पण्डिता नपि आनाय्य तेभ्यः शङ्करस्य वाचो युक्ति शास्त्रपाण्डित्यं च श्रावयामासुः ।

ते सर्वेऽपि पण्डिताः सम्भूय "महात्मन् ! सर्वज्ञस्तत्र भवान् । के वयं भवन्तं परीक्षितुम् ? स्वागतं भवतः । आगम्यताम्; शारदा-

पीठमलंक्रियताम् । सन्ति नः कतिपया स्संशयाः; तान्निवारयतु तत्र भवानिति" वदन्तः जय-जयध्वानै स्साकं अन्तः प्रवेश्य शारदापीठे आचार्यं शङ्करं उपवेशयामासुः ।

शङ्करः कतिपयकालं तत्रैव उषित्वा ब्रह्मसूत्राणां भगवद्-गीतायाः, उपनिषदां च अधिकरणा न्यधिकृत्य उपन्यसन् तत्रत्या-नन्वगृह्णात् । ततः स्वशिष्येषु मुख्यं कञ्चित् शारदापीठाधिपतिं विधाय ततः बदरिकावनं केदारक्षेत्रं च गतः ।

केदारक्षेत्रे हिमपातोऽधिकः । तत्रत्यं जलमतिशीतलम् । अतः शङ्करशिष्या दुस्सहेन शैत्येन स्नानसन्ध्यादिकं कर्तुमपारयन्तः आचार्यमुपगम्याऽहुः– "महात्मन् ! अतिशीतलप्रदेशोऽयम् । अतो-ऽत्राऽस्माभि र्नस्थातुं शक्यते" इति ।

आचार्यः शिवं प्रार्थ्य उष्णोदकनदीं काञ्चित् प्रवाहयामास, शिष्यक्लेशं च निवारयामास ।

तस्मिन् पुण्यक्षेत्रे तपस्तप्यन्तो महर्षयो बहवः प्रत्यहं शङ्करा-चार्य मुपेत्य गोष्ठीं कुर्वन्तः आसन् । कदाचित् गोष्ठी समये त्रिमूर्तिषु महान् कः इति प्रश्नः समुद्भूतः । तस्य समाधानं आचार्यः पौराणिकैः औपनिषदैः श्रुतैः नानाख्यानोपाख्यानैः न्यरूपयत् । "त्रिमूर्तयः किल ब्रह्माण्डाधिपतयः । ते च स्वस्व कार्येषु नियुक्ताः परब्रह्मणा । परं ब्रह्मैव परमात्मेत्युच्यते । सोऽनन्तकोटिब्रह्माण्ड-नायकः । प्रतिब्रह्माण्ड एकैकं मूर्तित्रयं; अतः त्रिमूर्तिस्वरूपाणि अनन्तकोटिसंख्याकानि । सत्येव "त्रिमूर्तिषु महान् कः" इति प्रश्न एव न जागर्ति । महतो महीयान वा अणोरणीयान् वा स एव परमात्मा परब्रह्माख्यो भवितु मर्हति ।

एव मेव इन्द्रः, वरुणः, अग्निः, सूर्यः, रुद्रः, मरुतः, यमः, सोमः, अश्विनः इत्येवमादयो बहवो देवाः ऋग्वेदप्रतिपादिता स्सन्ति । परन्तु सर्वं देवान्तर्यामी परमात्मा एक एव । "एक मेवा-द्वितीयं ब्रह्म" ।

# आनन्द – दक्षिणायनपरीक्षाणां सन्नाहकार्यक्रमः

## संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आं. प्र.)

## Programme for Samskrit Examination of September 1974.

| विना विलम्बशुल्कं आवेदनपत्राणां प्रेषणायान्तिमावधिः | १ रू. विलम्बशुल्केन सह आवेदनपत्र-प्रेषणाय अन्तिमावधिः | परीक्षाणां प्रचलनसमयः 1974 सेप्टम्बर् मासे |
|---|---|---|
| 20—7—74 | 31—7—74 | कोविदः 7, 8, 9 तिथिषु, विचक्षणसमर्थौ 7, 8 तिथ्योः, परिचयाभिज्ञे 8 तिथौ |

संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आं. प्र.)
20—8—74.

की. श्रीनिवासाचार्यः,
परीक्षामन्त्री.

*R. N. 1845/60.* *Postal C. T. R. 11.*
भान्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

## प्रहेलिका

सुवर्णालंकृता[1] कन्या हेमालंकारवर्जिता ।
साकन्या[2] विधवा[3] जाता गृहे रोदिति तत्पतिः ॥

(1) सुवर्णालंकृता = सुष्ठु वर्णेन कान्त्या अलंकृता ।
(2) साकन्या = विद्युदित्यर्थः ।
(3) विविधा धवाः पतयो यस्याः सा, जारिणीत्यर्थः ।

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S. B. P ,Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press. Chittoor. (A. P.) C. 1500.